ऋग्वेद उवाच

यदन्तःस्थानि भूतानि यतः सर्वं प्रवर्तते।
यदाहु तत्परं तत्त्वं साक्षाद्भगवती स्वयम्॥ २५॥

यजुर्वेद उवाच

या यज्ञैरखिलैः सर्वैरीश्वरेण समिज्यते।
यतः प्रमाणं हि वयं सैका भगवती स्वयम्॥ २६॥

सामवेद उवाच

ययेदं धार्यते विश्वं योगिभिर्या विचिन्त्यते।
ययेदं भासते विश्वं सैका दुर्गा जगन्मयी॥ २७॥

अथर्व उवाच

यां प्रपश्यन्ति देवेशीं भक्त्यानुग्रहिणो जनाः।
तामाहुः परमं ब्रह्म दुर्गां भगवतीं पुमान्॥ २८॥

सूत उवाच

श्रुतीरितं निशम्येत्थं व्यासः सत्यवतीसुतः।
दुर्गां भगवतीं मेने परं ब्रह्मेति निश्चितम्॥ २९॥

श्रुतयस्त्वेवमुक्त्वा ताः पुनरूचुर्महामुनिम्।
प्रत्यक्षं दर्शयिष्यामो यथास्माभिरुदाहृतम्॥ ३०॥

इत्येवमुक्त्वा श्रुतयस्तुष्टुवुः परमेश्वरीम्।
सर्वदेवमयीं शुद्धां सच्चिदानन्दविग्रहाम्॥ ३१॥

श्रुतय ऊचुः

दुर्गे विश्वमपि प्रसीद परमे सृष्ट्यादिकार्यत्रये
ब्रह्माद्याः पुरुषास्त्रयो निजगुणैस्त्वत्स्वेच्छया कल्पिताः।
नो ते कोऽपि च कल्पकोऽत्र भुवने विद्येत मातर्यतः
कः शक्तः परिवर्णितुं तव गुणाँल्लोके भवेद्दुर्गमान्॥ ३२॥

त्वामाराध्य हरिर्निहत्य समरे दैत्यान् रणे दुर्जयान्
त्रैलोक्यं परिपाति शम्भुरपि ते धृत्वा पदं वक्षसि।
त्रैलोक्यक्षयकारकं समपिबद्यत्कालकूटं विषं
किं ते वा चरितं वयं त्रिजगतां ब्रूमः परित्र्यम्बिके॥ ३३॥

या पुंसः परमस्य देहिन इह स्वीयैर्गुणैर्मायया
देहाख्यापि चिदात्मिकापि च परिस्पन्दादिशक्तिः परा।
त्वन्मायापरिमोहितास्तनुभृतो यामेव देहस्थितां
भेदज्ञानवशाद्वदन्ति पुरुषं तस्यै नमस्तेऽम्बिके॥ ३४॥

स्त्रीपुंस्त्वप्रमुखैरुपाधिनिचयैर्हीनं परं ब्रह्म यत्
त्वत्तो या प्रथमं बभूव जगतां सृष्टौ सिसृक्षा स्वयम्।
सा शक्तिः परमाऽपि यच्च समभून्मूर्तिद्वयं शक्तित-
स्त्वन्मायामयमेव तेन हि परं ब्रह्मापि शक्त्यात्मकम्॥ ३५॥

तोयोत्थं करकादिकं जलमयं दृष्ट्वा यथा निश्चय-
स्तोयत्वेन भवेद्ग्रहोऽप्यभिमतां तथ्यं तथैव ध्रुवम्।
ब्रह्मोत्थं सकलं विलोक्य मनसा शक्त्यात्मकं ब्रह्म त-
च्छक्तित्वेन विनिश्चितः पुरुषधीः पारं परा ब्रह्मणि॥ ३६॥

षट्चक्रेषु लसन्ति ये तनुमतां ब्रह्मादयः षट्शिवा-
स्ते प्रेता भवदाश्रयाच्च परमेशत्वं समायान्ति हि।
तस्मादीश्वरता शिवे नहि शिवे त्वय्येव विश्वाम्बिके
त्वं देवि त्रिदशैकवन्दितपदे दुर्गे प्रसीदस्व नः॥ ३७॥

सूत उवाच

इत्येवं श्रुतिवाक्यैस्तु श्रुतिभिः संस्तुता सती।
स्वरूपं दर्शयामास जगदम्बा सनातनी॥ ३८॥

ज्योतीरूपा हि सा देवी सर्वप्राणिव्यवस्थिता।
व्यासस्य संशयं छेत्तुं स्वतन्त्राकृतिमादधे॥ ३९॥

स्फुरत्सूर्यसहस्राभां चन्द्रकोटिसमद्युतिम्।
सहस्रबाहुभिर्युक्तां दिव्यास्त्रैरभिसंवृताम्॥ ४०॥

दिव्यालंकारभूषाढ्यां दिव्यगन्धानुलेपनाम्।
सिंहपृष्ठे समारूढां कदाचिच्छववाहनाम्॥ ४१॥

चतुर्भिर्बाहुभिर्युक्ता नवीनजलदप्रभा।
द्विभुजा च चतुर्हस्ता तथा दशभुजा क्षणे॥ ४२॥

अष्टादशभुजा क्वापि शतसंख्यभुजा तथा।
अनन्तबाहुभिर्युक्ता दिव्यरूपधरा क्षणे॥ ४३॥

कदाचिद्विष्णुरूपा च वामे च कमलालया।
राधया सहिताकस्मात्कदाचित्कृष्णरूपिणी॥ ४४॥

वामाङ्गाधिगता वाणी कदाचिद्ब्रह्मरूपिणी।
कदाचिच्छिवरूपा च गौरी वामाङ्गसंस्थिता॥ ४५॥

एवं सर्वमयी देवी कृत्वा रूपाण्यनेकधा।
व्यासस्य संशयच्छेदं चकार ब्रह्मरूपिणी॥ ४६॥

सूत उवाच

एवं रूपाणि चालोक्य पराशरसुतो मुनिः।
तां ज्ञात्वा परमं ब्रह्म जीवन्मुक्तो बभूव ह॥ ४७॥